ना(न्यं>)न्या[a]- -न्याः ऋ १,८०, ८; मै ४,९,१४‡[b]; शौ ८,५,९; ७,१५, १०,१,१६; पै ६, २२, १५; १६,१३, ५; २७,३; ३६, ६; १७,१५,४, -†न्यानाम् ऋ १,३३, ११; १२१, १३; मै ४, १४,१२, पै २, १९,१; -न्याम् काठ २३,६¶.

२नौ- [?]नावा.[c] ऋ २,४५,५.

नौघस्- नो ऽस्- द्र.

[?]त्सभून[d] पै २०,५९,३.

न्यंक- न्य(नि√अ)ञ्च् द्र.

न्यक्त- न्य(नि√अ)ञ्च् द्र.

[?] न्यू अझे[e] पै १३,१४,४

न्यग्रोध[f]- -धः मा २३,१३, का २५, ४,३, ते ७,४,१२, १, मै ४,४, २¶, काठ ४४,१, -धाः शौ ४, ३७, ४, पै १३, ४, ७, -धात्[g] शौ ५,५,५, -धे लि ४, ७, ५; ७[२], ४[६]; पै ६,४, ४[६], -धेन ते ७,३,१४,१; काठ ४३,४.

नैयग्रोध[h]- -ध- ते ३,४,८,४; -धेन मै ४,४,२¶.

न्य(नि-अ)ङ्कु[i]- -ङ्कौ[j] तै १,७,७,२.

न्यङ्कु[k]- -ङ्कुः मा २४, ३२; का २६,७,२; तै ५, ५, १७, १; मै ३,१४,१३; काठ ४७,७; -ङ्कून् मा २४,२७; का २६, ६, २; मै ३,१४,९.

¶न्य(नि√अ)च्,ञ्च्, न्युचामः काठ २४, ५, क ३७,६; न्युचेत्, न्यंचेत् काठ २४,५, क ३७,६. न्यारयन्त काठ २९,९.

न्य(नि-अ)क्त[l]- -क्ताः काठ २९, ९¶.

न्यं(नि-अ)च्,ञ्च्- नीच.[m] शौ ११, १,६; पै १६, ८९, ६; न्यक्,ग् ऋ ८,४,[१; ६५, १]; २८,३; ३२, २५; १०, ६०, ११[१]; १४, ५[n],१००, ८; काठ ३५, १४; क ४८,१३; †कौ १, २७९; २, ५८१; †जै १, २९, ५; ३,४७, ७; †शौ ६,९१,२[१]; २०, १२०, १; पै १, १११, १[१]; १९, १८, ८[१]†, ३७,१३; ४१, १५; १७; न्यङ् ऋ ४, १३, [५;१४, ५]; १०, २७, [१३; १४२, ५]; ¶ते २,४, १०,२; ५,५,३,२; मै १, ६, १२¶; काठ २३, ५[२]¶; शौ ५,२२, २; पै १९, १२, १२; ¶न्यञ्चः मै ४,६, ८; काठ २१, ४[२]; २२, ६; क ३१, १९[२]; ३४, १; न्यञ्चम् ऋ ५, ८३, ७; ते ३, १,११, ६†; ५,५,३,२¶; मै १, ४,१२¶; काठ ११,१३†; २५, ५¶; क ३९, २¶. पै ५, २१,१.

a) विप. ( [नावा तार्या-] नदी- प्रभृ. )। तार्थेऽर्थे यत् प्र तित्स्वरश्च (पा ४, ४,९१,६,१,१८५)।

b) पाभे. इते पृ १७९४ g टि. द्र.।

c) निर्देश. सस्वरा?। √नु [स्तुतौ]>२नौ- [तु. निघ ३,११]>नावा [तृ१] इति शोधः (तु [व्यु. अर्थस्य च विषय एव] वें. सा; वैतु. PW. GW. प्रभृ. √नु [स्तुतौ]>नाव्->प्र१ इति)।

d) मेद् गात्रोद्धभूत यस्ते⋯यास्य कमीम् इत्युत्तरार्ध-पाठः? प्रे (प्र इ) द् गात्रोऽकम् अभावयन्, भूयस्त्वाया-ऽस्याऽकल्पिपि (°स्तुनिमकार्पम्) इति शोधः।

e) पाठः? (तु. सस्थ. टि. ?नेननेनाम्)।

f) नाप. (वट-वृक्ष-)। व्यु.?। पस. नावग्रहः। न्यच्-+ √रुध् (=√रुह् >भावे) °रोधस्->कस. °न्यग्-रोधस्- > नैप. °न्यग्रो-+( √धा [°कृतौ]> भावे ) °ध- > बस. यनि. ( वैतु ऐब्रा [७, ३०] न्यच्-+ √रुह् [वा √रुन्ध् वा] > उस. यनि. इति, माश [१३, २,७,३] पाम [२, २, २९] ऐब्रा १मः कल्प इति)।

g) सपा. न्यग्रोधात् <>न्यग्रोधे इति पाभे.।

h) विकारेऽर्थे अण् प्र. ऐजागमश्च (पा ४,३,१४०; ७ ३,५)। नित्स्वरः।

i) नाप. (रथावयव-विशेष-)। गस. <नि√अञ्च्। धा. अर्थः?। उप. कृत्-स्वरः।

j) =सपा. तैब्रा १,३,५,४; २,७,८,१; १६, १ आपश्री १८,४,६, २२,२६,१७;२८,१८ बौश्री ११,७:२६; १८, १०:१९;१७.१९ वाश्री ३,१,२,१ वैश्री १७,१२:१० हिश्री १३,१,४४; २३,४,३१; ५७ आपमं २,२१, १७ पागृ ३,१४,६ हिगृ १,१२,२। अङ्के न्यङ्कौ इत्यस्य स्थाने लाश्री १, ७,५ द्राश्री ५, ४,६ लाश्री २, ८,९ तु अङ्का-न्यङ्कू इति, काठ २६,२ अङ्कन्यङ्कौ इति मागृ १, १३,४ अङ्कन्यङ्कौ इति च पाभे.।

k) नाप. (हरिण-)। व्यु. ?। पस. नावग्रहः। < नि √अञ्च् इति पाउ [१, १७]। अतिगतिमदर्थे °निर्भर्-(अतिशयवत्-)+(√अङ्क् [गतौ]>भावे) °अङ्कु-> बस.पूप. स्वरे °निर्भराऽङ्कु- >नैप. यनि. इति मतम्।

l) क्तः प्र. नत्वञ्च (पा ८, २,४८)।

m) विप.। जित्वन्ते उप. पूप. प्रकृतिस्वरः ( पा ६, २,५३ )।　　n) पाभे. इते पृ १८४८ f टि. द्र.।

नीची[a]– -ची ऋ ८,१०१, १३; पै १,८६,६; १६,४७,१०; –ची: ऋ १,६६,५;७२,१०;५, ४४ ४; ६, १७, १२; ७, १८, १५; ९, ८८,६; मै ४,१,१२¶; शौ ४, १५, १२[b]; पै ५,७,११.

नीचीन[c]– -नम् ऋ १०, ६०, ११; शौ ६, ९१, २†; पै १, १११,१; १९, १८,८†; –नस्य शौ ७, ५८, ५; पै १, ४८, १: –नाः ऋ १, २४, ७.

नीचीन-बार[d]– -रम् ऋ ५, ८५, ३; ८, ७२, १०; कौ २, ९५४; –रे ऋ १०,१०६,१०.

न्यु(नि-अ)ञ्चन[e]– -नम् ऋ ८, २७, १८; मै १, ८, २¶[f]; पै ८,१६, ८; ९; १७,१३,३; २०,२८,३.

न्यञ्चै(न-ए)षिन्[g]– -षिणः मै ४,६,९¶.

न्य( नि√अ)ञ्ज्, न्यक्ते काठ ७,७, ८¶; ¶न्यनक्ति काठ २५,१०[1]; क ४०, ३[1]; न्यञ्जति शौ ९, १,१७; पै १६, ३३, ८; न्यनक्तु शौ १८,३,११;१२.

न्यानजे ऋ १,१६१,४.

न्य(नि-अ)क्त,क्ता– -क्तः तै ३,३,९, १; पै १९, ३६, ११; –¶क्तम् तै १,५,९,४, ५, २, ३, ५; ६, १,३,२; मै १, १०, १३; ३,२, ५; ८,५[1]; काठ ८, २[1]; १८, १९; १९, १; २५, ६[1]; ३६, ७; क ६,७[2]; २९, ७, ८; ३९, ३;४[2]; –¶क्ताम्[h] शौ १४, १, ३३; पै १८,१०,३.

!न्यन्तर्[i] काठ १४,२.

!न्यन्मृणोन्मृणो गाद्[j] पै १, ९७,३.

!न्यन्वञ्चनीम्[k] खि ४,७[1],२.

न्य(नि-अ)प√दंश्, नि" अपादशत् पै १९,४१,१६; ४२,१.

न्य(नि-अ)प-परि√दिह्

क्न्यपपरि-दिग्ध– -ग्धम् पै २,३१, ६.

न्य( नि-अ )भि √हिंस्, न्यभिहिंसति खि ४,५,११[l]

!न्ययत्[m] पै १७,११,२.

न्ययन– नी(नि√इ) द्र.

न्य(नि√अ)र्थ्

न्य(नि-अ)र्थ[n]– -र्थम् ऋ ७, १८, ९; १०, १०७,८; –र्थान्[o] ऋ १०, १२८, ७; तै ४, ७, १४, २†; –र्थानि ऋ ६, २७,६.

न्य(नि√अ)र्प्>र्पि, न्यर्पय शौ १०, ३. १५; पै १६, ६४, ४; †न्यर्पयाम् ऋ ७, १०४, १; काठ २३,११; शौ ८, ४, १; पै १६, ९,१.

न्यर्(नि-अ)र्पित– -ताः शौ १०, ३, १५; पै १६,६४,४.

न्य(नि-अ)र्बुद[p]– -दम् खि ४, ११, ८[q]; मा १७,२; का १८, १, २; तै ४, ४, ११, ४; मै २,८,१४; काठ १७, १०[1]; क २६, ९; शौ ८,८,७. १०, ८, २४, ११, ७, १७; पै १६, १०३, १; –दाय तै ७,२,२०,१; काठ ४२, १०; –दे काठ ३९,६.

[a]) विप. (उपमू-, गो- प्रभृ.)।

[b]) तु. सस्थ. टि. श्रुत ' सुञ्ज ।

[c]) स्वार्थे ख> ईनः प्र अचोऽग्नोणो दीर्घश्च (पा ५, ४, ८;६,३,१३८; ४,१२८) प्र. स्वरश्च ।

[d]) विप. ([*नीचैद्-वृत्त-] अवत-, कवन्ध- [=मेघ-]; गो- [=रश्मि-, ग्रह-]) । बस. पूप. स्वरः । उप. अर्थे: व्यु. श्री । ( √वृत् [वर्तने] > भावे) *वृत्त- > नैप्र. यनि. (वैतु. या [१०,४] नैप्र. <द्वार- इति) ।

[e]) नाप. ( प्रवण-मार्ग-[ऋ ], निलय- ) । गस. । उप. अधिकरणे ल्युट् प्र. ।

[f]) पामे. कृते पृ १५२४ f टि. द्र. ।

[g]) विप. (देव-)। उप. < √इष् [इच्छायाम् ] ।

[h]) सपा. न्यंकाम् <> व्यंकाम् <> वित्ताम् आपमं १,१०,२ इति पामे. ।

[i]) नि-यन्तृ- > -०यन्तः इति शोधः (तु. सपा. मै १, ११, ४) ।

[j]) पाठः ? नि, वन्मृणो [ण-उ] म्मृण- > -णः अवाद् इति शोधः ? ।

[k]) पाठ. ? !न्यन्वञ्चनीम् इत्यत्र शोधः द्र. ।

[l]) सपा. खिसा २९, ११ अन्योऽभिहिंसति इति पामे. ।

[m]) पाठः ? (निर्√वृध् [वृद्धौ] > लुङि प्रपु१ ) *निर्- वृधत् इति शोधः । नैप्र. यनि. निरविधाम इति भावः (तु. छन्दः) । 'यत् ज्येष्ठं (सत्) पदः [ पं१ (लोकमर्यादात् [ जातविकासनम् ])] *निरवृधत् ( निर्गत्य वृद्धिमापन् [ मर्त्यलोकापेक्षया बृहत्तरमभूत् ])' इति वा. ।

[n]) नाप. । उपसर्गस्य धा. सदृशरूपें [ अनर्थे] नृ तेः । गस. उप. भावे घञ् प्र. थाथीयः स्वरश्च ।

[o]) पामे. कृते पृ १८९९ l टि. द्र. ।

[p]) नाप. ( संख्या-विशेष- ) । प्रास. । तु. टि. १३र्बुद-३-

[q]) सपा. खिसा ३३, ७ न्यर्बुदम् इति, काशि १३५: १ !न्यद्भुतम् इति पामे. ।

न्यु(नि-अ)र्बुदि[a]- -दि: शौ ११,११, ४; --०दे शौ ११, ११, ६,११; १२;१९;१२,२०;२१.

न्य(नि √अ)व्, नि[b]…अविष्टम् ऋ ८, ५,१३.

न्य(नि-अ)व √चर्, †अव…निचरन्ति ऋ ९,१०७,१९; कौ २, ५१६; २, २७२, जै १,५३, ६; ३, २३,४.

न्यवे( नि-अव √इ ), नि…अवेहि पै १९,३९,६.

?न्यष्टकाः[c] पै १९,२०,३.

न्य(नि √अ)स् ( भुवि ), नि स्याम ऋ ९, ९८,५[d].

न्य(नि √अ)स् ( क्षेपे ), ¶न्यस्यति[e] काठ २०, २, क ३१, ४, ¶न्ये- स्यन्ति मै १, १०, १९; काठ ३६, १२, न्यस्यथ शौ १४, २, २२, पै १८, ९, ४, ¶न्यस्येत् तै ५, ४,२,५; मै ३,३,४; काठ २१, ६;२९,८[e]; क ३१,२१.

न्य(नि-अ)स्य मै ४,८,१¶.

न्या(नि-आ)म- -माः पै १,८७,१; १२,५४,१.

न्य(स्तक>)स्तिका[f]- -का शौ ६, १३९,१

न्यह्न[g]- -ह्ने शौ १८,४,६५.

न्या(नि-आ) √कृ, न्याकुरु ऋ १०, १९,२[h].

न्या( नि-आ ) √गच्छ्,गम्, ¶न्या- गच्छन्ति मै ४, ५, ८, न्या- गच्छम् तै ७, १, ६, १; काठ १२,३; २७,९; न्यागच्छेत् काठ १२,३.

न्यागन् शौ ७,७७,८‡[i].

न्या(नि-आ) √द्रु, न्याद्रवत् मै ४,६,४

न्या(नि-आ) √धा, †नि…आदधुः ऋ ८, ८४, २; कौ २, ५५५; जै ३, ४८,११.

न्या( नि-आ ) √नम्, ¶न्यानमन्ति काठ २८,४; क ४४,४.

?न्यानयत्[j] शौ ७,३९,५; पै २, ७९, ५; ३, २९,६.

न्या( नि-आ ) √प्लु, न्याप्लवत मै २, १,११¶.

न्याय-, ?न्यायन- नी(नि √इ)द्र.

न्या(नि-आ) √युज्, आ…नियुनक्तु पै १९, २८,१०[k].

न्या(नि-आ) √वह्, न्यावह पै १९, ४१, १२.

न्या( नि-आ ) √धा, न्याधाति पै २०, ६१,४; १०.

न्या(नि-आ) √ वृत्

न्या-वृत्- -वृतः पै १९,१६,३.

न्यास- न्य(नि √अ)स् [क्षेपणे] द्र.

?न्यासाम्[l] पै १९,५४,१.

?न्युं[m] ऋ ७,२१,२.

---

[a]) नाप. (देव-विशेष- [वैतु. सा. सर्प-विशेष- ?])। व्यु. ?। प्रास.। पूप. प्रकर्षार्थे कव्य. (तु. टि. अर्बुदि-)।

[b]) तु वें. सा.; वैतु OW. गत्यभाव इति, MW. ॐनि-आगनम् इति योग इति (वैतु प्रकृते सूक्ते मन्त्राः १६;२४; ३०)।

[c]) पाठः ? कन्यष्टकाः इति शोध (तु. पाम्र ३, ३,१; १०; ११)।

[d]) तु. वें. OW.; वैतु. सा. नि इति स्याम इति।

[e]) तु. परि. सस्थ. टि. भुवि।

[f]) नाप. (ओषधि-विशेष- [तु. कौ ३६,१२])। व्यु ?। यथा. नि-अस्तिका इति। (निर् √कृष् [°क्रुद्धौ, रोहणे]> भवे) °निर्-कृष्ट- > [स्वार्थे]) °निर्कृष्ट(क-)> °ष्टिका-> नैप्र. नीवस्तिका-> यनि. (वैतु. सा. PW. प्रभृ. < नि √अस् [क्षेपे] इति, ?B. < नि √आस् [उपवेशने] इति च)।

[g]) नाप. (प्रातर्वेला [तु. सा.; वैतु. PW. प्रभृ. न्यह्- [तु.काश १,२,३,७] इत्यनेन भिन्नेन मताऽपि प्राति. संभिन्दन्त इव यनि. प्राति. अपराह्ण-पर्याय इति ?])। व्यु ?। यथा. नि-अह्न- इतीव। (निर् √°अस् [मानि]> भावेऽधिकरणे वा) °निर्-अस्न- > नैप्र. यनि. (तु. म(न)स्न- इति, वैतु. अन्ये अहन्- > अह्न- [=दिन-] इति उप. इति ?)। गस. उप. स्वरः।

[h]) पाभे. ऋते पृ १५३ c टि. द्र.।

[i]) सपा. न्यागन् <> अभ्यागात् (वा ११, ४५ च) इति पाभे. (तु. परि. टि.)।

[j]) पाठः? (मायिन्->यिनी->)-नी आऽनयत् इति द्वि-पद- शोधः (तु. छन्दः, सपा. पै [२,७९,३] ?मिन्यानयत् इत्यत्र टि. च)।

[k]) 'मेधा…मे…स्त्वो… बह्वीर् गावः [द्वि३]' इति वा.।

[l]) पाठः ? अभ्यासाम् इति शोध° द्र.।

[m]) पाठः ? ( √°नेम [स्तुतौ] > कर्मणि) °नेमस्- (स्तोत्र- [=°नमस्-]) > द्वि१ °ने(मस् > )मो इति शोधः (तु. छन्दः) '(स्तोतारः) सोममादः दुध्रवाचः (इन्द्रस्य) विदथे (पूजार्थे) यज्ञं प्रयन्ति बर्हिः (च) विषयन्ति (°प्रस्तारयन्ति)। (अथ ते) दूर- उपब्दः (दूरशब्दवतः) वृषणः यशसः (प्रातिमतः, इन्द्रस्य) गृभाद् आ (ग्रहण-पर्यन्तं) नेमो (स्तोत्रं) भ्रियन्ते (स्तुवन्ति)' इति वा. इति कल्पाऽत्र विषये पृ १६६१ j टि. यथाऽपेक्ष-

न्यु(नि√उ)च्, न्युच्यतु शौ २,१४, ३; ६, २६,३; पै २,४,५; १९, १९,२.

नि···उवोच[a] ऋ ७,४, ३; †नि···उवोच ऋ ७,२१,१; कौ १, ३१३; जै १,३३,१.

†न्यो(नि-ओ)च(न>)नी[b]- -नी ऋ १०,८५,६; शौ १४, १, ७; पै १८,१,७.

न्यो(नि-ओ)चर्[c]- -रः शौ ५,२२, ५; पै १३,१,७.

न्युप्त-, न्युप्य, न्युप्यमान- नि√वप् द्र.

न्यु(नि√उ)ब्ज्, ‡न्युब्ज[d] कौ १, ९५; जै १, १०, ६; शौ ८,८, ६; ११, १,६; पै १६, २९, ६; ८९,६; न्यौब्जत्[e] मै ३, ९, ३¶.

न्यु(नि√उ)प्, नि···ओषति ऋ १, १३०,[८; ८, १२, ९]; न्योषतु शौ १२, ११, १२; †न्योष ऋ १०, ८७, १२; शौ ८, ३, २१, पै १६, ८,१; †नि···ओषतात् ऋ ४, ४, ४; मा १३, १२; का १४, १,१२; तै १, २, १४, २; मै २,७,१५; काठ १६, १५; क २५, ६; †न्योषतम् ऋ ७,१०४, १; काठ २३,११; शौ ८, ४,१; पै १६,९,१.

न्यू(नि√ऊ)ह्[f], न्यूह्यमयन्ते ऋ १०, १४,३.

¶न्यू(नि-ऊ)न,ना[g]- -नया तै ५, १, ९, २; ४,७, ६;.६, १; २,७; -नाम् तै ५, १, ९, २; ४,७,६; ६,१,२,७.

न्यू(नि√ऊ)ह्, न्यूहति मै ३, ९, ४¹¶.

न्यू(नि√ऋ)ञ्ज्, †न्यृञ्जत् ऋ ७, १, २; ५, ६; काठ ३९, १५; कौ २, ७२४, जै ३, ५९, १७.

न्यृञ्जेत् तै ६,४,६,३¶.

न्यर्त ऋ ४,१६,९.

न्यू(नि√ऋ)ञ्ज्, न्यृञ्जते ऋ १,५४, ३; न्यृञ्जते ऋ १, १४३, ५; †नि···ऋञ्जते ऋ १, १७, ३; कौ १, १३५; जै १, १४, १; न्यृञ्जसे ऋ ८,९०, ४; न्यृञ्जसे ऋ १०, १४२, २[h]; न्यृञ्जे ऋ ३, ४, [(२, ३, ७) ७;७, ८ (१०, ६६, १३; ११०,७)]; ४, २६,१.

न्यृ(नि√ऋ)प्, †न्युपन्ति ऋ १,५९, ७; मै ४,१३,३.

न्यृ(नि-ऋ)ष्ट,ष्टा- -ष्ट ऋ १०,१०८, [(७, १०,६) ७]; -ष्टम् ऋ ४, १८,५; २०, [६; १०, ४२,२]; शौ २०, ८९, २†; -ष्टे ऋ ३, ५५,२०.

न्ये(नि√ए)र्[i], न्येरिरे ऋ ४,१,९[j]; ८, १९, १८; २१; न्ये(नि-ए)-रिरे[j] ऋ १, १२८, ८[k]; २, २,३.

?न्यो[k] शौ ११, ९, ४; पै १६, ८२, ४.

†न्यो(नि-ओ)कस्[l]- -कसे ऋ १,९,

---

मनुकूलयितव्यम् (वैतु. पपा. प्रभृ. नि उ इति द्वे पदे अत्र स्यातामिति कृत्वा नि ··· श्रियन्ते इति योग इतीव ?)।

[a]) वैतु. सा. <नि√वच् इति।

[b]) नाप.। अर्थः न्यु. च ?। पपा. यनि. अवग्रहः।

[c]) विप. ([निवास कृत-] तक्मन्-)। व्यु.?। पपा. यनि. अवग्रहः। (नि√उच् [*निवासे] > अधिकरणे) *न्यो (नि-ओ)क्- + (√चर् [*कृतौ] > कर्तरि) चर्- > उस. *न्योक-चर्- > नैप्र. यनि.। तृतीयस्य पादस्य पाठः? तु. सस्थ. टि. यावद्।

[d]) सपा. न्युब्ज<>विब्ज इति पाभे.।

[e]) न्यौ॰ इति स्वरः? यनि. शोधः।

[f]) धा. अन्तर्विष्ट-शब्द-विशेषे वृत्तिः (तु. GW.; वैतु. PW. प्रभृ. न्यूह्- > नावा. इति मन्वानाः स्वरविरोधाद् चिन्त्याः)।

[g]) प्रास.।

[h]) वै. प्रयुः; सा. GW. मयुः।

[i]) पाधा. पठितात् सतः √ईर् इत्यतोऽन्योऽयं धा. प्रेरणार्थे द्र. (तु. पपा. यनि. अवग्रहः; वैतु. सा. नि√ईर् इति च, PW. प्रभृ. नि-आ-√ईर् [तु. ऋ १,६,४] इति च धा. निर्देशुका इति)।

[j]) ?GW. नि ईरिरे इति प्रस्तावुकः?।

[k]) पाठः? (योनि- > *योन्यु- >)-न्यम् (विप. [ब्रह्मन्-]) इति शोधः। सस्थ. दिह्- > -ढम् इति शोधोऽपि द्र.। शेषं पृ १६६४ c टि. गतम् (वैतु. न्युः इति पपा. इतीव कृत्वा सा. CA. च यनि. [√नी > कर्तरि] *नी- > प्र१ इति, B. तु तदेव रूपं प्र१ इति च, GW. नि इत्यस्य नि. किंचिद् वृत्तमितीव च ?)।

[l]) विप. ([*समीप-वसति-] इन्द्र-, सोम-)। बस. पूप. स्वरः। पूप. च अन्ति इत्यस्य पर्यायः। उप. <√उच् [*निवासे]।